ॐ श्रीअनन्तलब्धिनिधानाय श्रीगौतमगणधराय नमः

बहुश्रुतधरश्रीमद्आनन्दसागरसूरीश्वरेभ्यो नमः

श्रीजिनकीर्तिसूरिणा विरचिता

# स्वोपज्ञनमस्कारस्तववृत्ति

श्रीजैनशासनसंरक्षक, कलिकालकल्पतरु, वादिगजकेसरी, वर्धमानजैनागममंदिरसंस्थापक, नूतनपंथमूलोच्छेदक, बहुश्रुतधरश्रीमद् आनंदसागरसूरीश्वरस्तस्य शिष्यरत्न, अनुयोगाचार्य, पंन्यासप्रवर, विजयसागरगणिवरसुशिष्यशिष्य मुनिश्रीचंदनसागरेण संशोधिताः।

मुनिश्रीमेघसागरेण प्रोत्साहितास्सुर्यपुरबंदरे छापरीआशेरीस्थितश्रमणोपासकामर्तेषामार्थिकसहायबलेन मुद्रापिता।

वीर सं० २४७० ] प्रकाशक—चंदनसागरज्ञानभंडार वेजलपुर ०—१०—० [ प्रति ४४०

मुद्रकः शा. फकीरचंद मगनलाल बदामी मुद्रणालयः धी 'जैन विजयानंद' प्रिं. प्रेस,—सुरत.

# નિવેદન

આનુપૂર્વિ, અનાનુપૂર્વિ અને પશ્ચાનુપૂર્વિની રીતિ ઘણી

**શ્રીનમસ્કારસ્તવવૃત્તિ**માં પ્રસ્તાર, ભાંગા, નષ્ટ, ઉદ્દિષ્ટ,

સુંદર રીતે કોષ્ટકોપૂર્વક સમજાવવામાં આવી છે. **મહારાજશ્રી**ના સંસારીપણે **સુપુત્રી** બાલબ્રહ્મચારિણી સાધ્વીજી

પરમપૂજ્ય પાખંડીવિજેતા **મુનિવર્ય શ્રીહંસસાગરજી** ની ઘણી માગણી થવાથી તેમજ જૈનજનતામાં સારી રીતે

મહારાજ **શ્રીવિદ્યાશ્રીજી**ની રચેલી **"શ્રીવિદ્યાસંગીતાવલી"** (સુરત) છાપરીઆશેરીના કેટલાક ગૃહસ્થોનો ઉલ્લાસ થએલો

આદરને પામેલ હોવાથી તેની બીજી આવૃત્તિ છપાવવા માટે (બેંક મેનેજર) વિગેરે તરફથી ભેગી થયેલી પરંતુ

અને તે માટે સારી રકમ **શ્રી છોટાલાલ મનસુખલાલ મુનસફ** શ્રેષ્ઠીવર્યો **ગાંધી નગીનદાસ વાડીલાલ** તથા **ગાંધી રતિલાલ**

તેટલામાં તો આની બીજી આવૃત્તિ તરીકે વેજલપુરનિવાસી આવતાં તે માટે ભેગી થયેલ રકમનો ઉપયોગ લગભગ

**મંગલદાસ** તરફથી ૧૦૦૦) કોપી છપાવાતી હોવાનું જાણવામાં આવેલ તે અનુસાર આ **નમસ્કારસ્તવવૃત્તિ** નામનો

તેટલો ખર્ચ લાગે તેવો કોઇપણ ગ્રન્થ છપાવવો તેવું નક્કી કરવામાં આવેલ છે.

અમૂલ્ય ગ્રન્થ શ્રી છોટાલાલ મનસુખભાઇ વિગેરેની સહાયથી પ્રસિદ્ધ કરવામાં આવેલ છે. રીતે આરાધનામાં ખડી કરેલ

**વીસમી સદી**માં થયેલ મહાપાખંડીનૂતનપન્થીવિજયરામચંદ્રસૂરિજીએ સમાજમાં કપોલકલ્પિત ગ્રહણ વિગેરે અસજ્ઝાયના સ્થાનોની

પર્વતિથિની ક્ષયવૃદ્ધિની શાસ્ત્ર અને પરંપરાથી વિરૂદ્ધ માન્યતા, જન્મમરણના સૂતકોનું ઉત્થાપવું,

અવગણના કરવી, ગ્રહણની અપવિત્રતાને છડેચોક ન માનવી વિગેરે અનેક ઉત્સૂત્ર પ્રરૂપણાઓ કરીને સમાજનું શાન્ત વાતાવરણ છિન્નભિન્ન કરી મૂકેલ. તેમનાં-વિ. રામચંદ્રસૂરિના તથા તેમને જમાવેલ ટોળીના તમામ પાખંડોને ખુલ્લા કરનાર તેમજ તેની ઉત્સૂત્ર પ્રરૂપણાઓનો ખુલ્લી રીતે પડકાર કરનાર ધર્મવીર, બહુશ્રુતધર, **પૂ૦ આચાર્યદેવેશ શ્રીમદ્ આનંદસાગરસૂરીશ્વરજી મહારાજશ્રીને** હજુ સુધી છપાયેલ નથી તેવો આ અપૂર્વ ગ્રન્થ છપાવવાનો મારો વિચાર વિનતિપૂર્વક દર્શાવતાં પરમકૃપાલુ તેઓશ્રીમાને આ ગ્રન્થની કરાવી રાખેલ પ્રેસકોપી મને આપી જેના યોગે હું આ ગ્રન્થ પ્રસિદ્ધ કરવા શક્તિમાન થયો હોઈ તે બદલ અત્ર તેઓશ્રીનો પરમોપકાર માનુ છુ.

સદરહુ પ્રેસકોપીને મૂળ પ્રત જોડે મેલવવા માટે આની મૂળ પ્રત પૂ૦ **મુનિશ્રી કંચનવિજયજી મહારાજશ્રી** પાસેથી પ્રાપ્ત કરી છે તે બદલ તેઓનો પણ અત્ર રૂણી છું.

પ્રેસકોપી તથા હસ્તલિખિત પ્રત બન્નેને મેલવી જોયા બાદ છપાવતાં જેટલી બની શકી તેટલી શુદ્ધિની કાલજી રાખી છે છતાં યે પ્રેસદોષથી અગર દૃષ્ટિદોષથી કોઇ સ્થાને અશુદ્ધિ રહી હોય તો તે બદલ વિદ્વાન્ પુરૂષોએ ક્ષમા આપીને સુધારા સુચવવા તેમજ સુધારીને વાંચવા કૃપા કરવી.

**ચંદનસાગર**

ॐ श्रीअनन्तलब्धिनिधानाय श्रीगौतमगणधराय नमः
बहुश्रुतधरश्रीमद्‌आनन्दसागरसूरीश्वरेभ्यो नमः
श्रीजिनकीर्तिसूरिणा विरचिता

# स्वोपज्ञनमस्कारस्तववृत्ति

ॐ नमः सिद्धं । जिनं विश्वत्रयीवंद्य, मभिवंद्यविधीयते । परमेष्ठिसूत्रव्याख्या, गणितप्रक्रियाऽन्विता ॥१॥ तत्रादावभिधेयगर्भा समुचितेष्टदेवता नमस्काररूपमंगलप्रतिपादकां गाथामाह—

परमेष्ठिनमुक्कारं, थुणामि भत्तीइ तन्नवपयाणं । पत्थार १, भंगसंखा २, नट्ठ ३, दिट्ठा ४ कहणेणं ॥१॥

व्याख्या परमेष्ठिनोऽर्हदादयस्तेषां नमस्कारः श्रुतस्कंधरूपो नवपदाष्टसंपदष्टषष्ट्यक्षरमयो महामंत्रस्तं भक्त्या स्तवीमि, तस्य नमस्कारस्य नवसंख्यानां पदानां प्रस्तारो भंगसंख्या नष्टमुद्दिष्टं आदिशब्दानुपूर्व्यनानुपूर्व्यादिगुणनमहिमा च, एतेषां कथनेन तत्रादौ प्रथमो व्यस्तमपि बहुवक्तव्यं प्रस्तारमुल्लंघ्य स्वल्पवक्तव्ये भंगपरिमाणे करणमाह—

एगाईण पयाणं, गणअंताणं परुप्परं गुणणे । अणुपुव्विप्पमुहाणं, भंगाणं हुंति संखाउ ॥२॥

व्याख्या इह गणः स्वाभिमतः पदसमुदायः ततः एकादीनां पदानाम् द्विकत्रिकचतुष्कपंचकादिगणपर्यन्तानां स्थापितानां

परस्परं गुणने–ताडने आनुपूर्व्यनानुपूर्व्यादिभंगानां संख्या स्युः, तथाहि–एकादीनि पदानि नवपर्यन्तानि क्रमेण स्थाप्यन्ते १।२।३।४।५।६।७।८।९। अत्र मिथोगुणने यथा अत्राद्यस्यैकरुपस्य पदस्य द्वितीयाभावेन मिथोगुणनाभावात् एक एव भंगः, तथा एकद्विकयोर्गुणने जातौ द्वौ द्विकगणस्य भंगसंख्या २ द्वौ त्रिभि र्गुणितौ जाता षट्, एषां त्रिकगणस्य भंगसंख्या ३, ततः षट् चतुर्भि र्गुणिता जाताश्चतुर्विंशतिः एषा चतुष्कगणस्य भंगसंख्या ४, तत श्चतुर्विंशतिः पंचभिर्गुणिता जातं विंशत्युत्तरं शतं एषा पंचकगणस्य भंगसंख्या ५, विंशत्युत्तरशतं षड्भि र्गुणितं जातानि सप्तशतानि विंशत्युत्तराणि एषा षट्कगणस्य भंगसंख्या ६, इयं च सप्तभिर्गुणिता जाता पंचसहस्रचत्वारिंशदधिका एतावती सप्तकगणस्य भंगसंख्या ७, इयं अष्टभिर्गुणिता जाता अष्टकगणस्य भंग संख्या चत्वारिंशत्सहस्राणि त्रीणिशतानि विंशत्युत्तराणि ८, एते भंगा नवभि र्गुणिता जाता स्तिस्रो लक्षाः द्वाषष्टिः सहस्राः अशीत्यधिकानि अष्टौ शतानि च एषा नमस्कार नवपदानां आनुपूर्वी अनानुपूर्वी पश्चानुपूर्वी भंगानां संख्या ९. एता एव भंग संख्या गाथाभिराह–

एगस्स एगभंगो, दोण्णं दो चेव तिण्हछभंगा। चउवीसं च चउण्णं, वीसुत्तर सयं च पंचण्हं ॥३॥

सत्तसयाणि वीसा, छण्हं पणसहसचत्तसत्तण्णं। चालीससहस्सतिसया, वीसुत्तरा हुंति अट्ठण्हं ॥४॥

लक्खतिगं बासट्ठी, सहस्स अट्ठसयाणि तह। असीइ नवकार नवपयाणं, भंगसंखाउ नायव्वा ॥५॥

गाथात्रयं स्पष्टं एषां भगानामान्याह–

तत्थ पढमाणुपुव्वी, चरमा पच्छाणुपुव्विया नेया। सेसाओ मज्झिमाओ, अणाणुपुव्वीओ सव्वाओ॥६॥

स्पष्टा अत्र पंचपदीमाश्रित्य विंशत्युत्तरशतभंगकयंत्रकं लिख्यते यथा, अथ प्रस्तारमाह–

अणुपुव्विभंग हिट्ठा जिट्ठं, ठविय अग्गओ उवरिं सरिसं। पुव्विं जिट्ठाइ कमा, सेसे मुत्तुं समयभेयं॥७॥

व्याख्या–आनुपूर्व्वी भंगस्य पूर्वन्यस्तस्योपलक्षणत्वादनानुपूर्व्वीभंगस्याऽपि पूर्वन्यस्तस्याऽधस्तात् द्वितीयपंक्तावित्यर्थः, ज्येष्ट सर्वप्रथमं अंकं स्थापय इति क्रिया सर्वत्र योज्या तथाऽग्रत उपरीति उपरितनपंक्तिसदृशं अंकराशी मितिगम्यं स्थापय तथा पूर्व्वमिति यत्र ज्येष्टः स्थापितस्ततः पूर्व्वभागे पश्चाद् भाग इत्यर्थः ज्येष्टानुजेष्टादिक्रमात् शेषान् स्थापय अंकानिति गम्यं वक्ष्यमाणगाथारीत्या सदृशांक स्थापना समयभेदस्तं मुक्त्वा–टालयित्वेत्यर्थः तत्र पचपदीमाश्रित्योदाहरणं यथा १२३४५ एषाऽऽनुपूर्व्वी अत्र एकस्य सर्वज्येष्टत्वेन तस्यापर ज्येष्टाभावान्न किंचिन्तदधः स्थाप्यते, ततो द्विकस्यैकको ज्येष्टः स्यादतः स तदधः स्थाप्यते, अग्रत उपरीति उपरितनपंक्ति सदृशोऽंकराशि ३४५ रुपः स्थाप्यते, शेषोऽत्र द्विकस्ततः सः पूर्वं स्थाप्य जाता द्वितीयापंक्तिः २१३४५, अथ तृतीयपंक्तौ आद्यस्य द्विकस्य एकको ज्येष्टोऽस्ति परं तस्मिन् स्थाप्यमानेऽग्रत उपरितनांक १३४५ रुपस्थापने सदृशांकस्थापनारुपः समयभेदः स्यात् ततो द्विको मुच्यते एकस्य च ज्येष्टाभावात्यागः ततः एककं द्विकं च मुक्त्वा त्रिकस्य ज्येष्टो द्विकोऽस्ति तदधः स्थाप्यते अग्रत उपरि सदृशो ४५ रुपावंकौ स्थाप्यौ पूर्वं च शेषावेककः त्रिको ज्येष्टादिक्रमात् स्थाप्यो जाता तृतीयपंक्तिः १३२४५॥

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| १ २ ३ ४ ५ | १ २ ३ ५ ४ | १ २ ४ ५ ३ | १ ३ ४ ५ २ | २ ३ ४ ५ १ |
| २ १ ३ ४ ५ | २ १ ३ ५ ४ | २ १ ४ ५ ३ | ३ १ ४ ५ २ | ३ २ ४ ५ १ |
| १ ३ २ ४ ५ | १ ३ २ ५ ४ | १ ४ २ ५ ३ | १ ४ ३ ५ २ | २ ४ ३ ५ १ |
| ३ १ २ ४ ५ | ३ १ २ ५ ४ | ४ १ २ ५ ३ | ४ १ ३ ५ २ | ४ २ ३ ५ १ |
| २ ३ १ ४ ५ | २ ३ १ ५ ४ | २ ४ १ ५ ३ | ३ ४ १ ५ २ | ३ ४ २ ५ १ |
| ३ २ १ ४ ५ | ३ २ १ ५ ४ | ४ २ १ ५ ३ | ४ ३ १ ५ २ | ४ ३ २ ५ १ |

| ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|
| १ २ ४ ३ ५ | १ २ ५ ३ ४ | १ २ ५ ४ ३ | १ ३ ५ ४ २ | २ ३ ५ ४ १ |
| २ १ ४ ३ ५ | २ १ ५ ३ ४ | २ १ ५ ४ ३ | ३ १ ५ ४ २ | ३ २ ५ ४ १ |
| १ ४ २ ३ ५ | १ ५ २ ३ ४ | १ ५ २ ४ ३ | १ ५ ३ ४ २ | २ ५ ३ ४ १ |
| ४ १ २ ३ ५ | ५ १ २ ३ ४ | ५ १ २ ४ ३ | ५ १ ३ ४ २ | ५ २ ३ ४ १ |
| २ ४ १ ३ ५ | २ ५ १ ३ ४ | २ ५ १ ४ ३ | ३ ५ १ ४ २ | ३ ५ २ ४ १ |
| ४ २ १ ३ ५ | ५ २ १ ३ ४ | ५ २ १ ४ ३ | ५ ३ १ ४ २ | ५ ३ २ ४ १ |

| ११ | १२ | १३ | १४ | १५ | १६ | १७ |
|---|---|---|---|---|---|---|
| १ ३ ४ २ ५ | १ ३ ५ २ ४ | १ ४ ५ २ ३ | १ ४ ५ ३ २ | २ ४ ५ ३ १ | २ ३ ४ १ ५ | २ ३ ५ १ ४ |
| ३ १ ४ २ ५ | ३ १ ५ २ ४ | ४ १ ५ २ ३ | ४ १ ५ ३ २ | ४ २ ५ ३ १ | ३ २ ४ १ ५ | ३ २ ५ १ ४ |
| १ ४ ३ २ ५ | १ ५ ३ २ ४ | १ ५ ४ २ ३ | १ ५ ४ ३ २ | २ ५ ४ ३ १ | २ ४ ३ १ ५ | २ ५ ३ १ ४ |
| ४ १ ३ २ ५ | ५ १ ३ २ ४ | ५ १ ४ २ ३ | ५ १ ४ ३ २ | ५ २ ४ ३ १ | ४ २ ३ १ ५ | ५ २ ३ १ ४ |
| ३ ४ १ २ ५ | ३ ५ १ २ ४ | ४ ५ १ २ ३ | ४ ५ १ ३ २ | ४ ५ २ ३ १ | ३ ४ २ १ ५ | ३ ५ २ १ ४ |
| ४ ३ १ २ ५ | ५ ३ १ २ ४ | ५ ४ १ २ ३ | ५ ४ १ ३ २ | ५ ४ २ ३ १ | ४ ३ २ १ ५ | ५ ३ २ १ ४ |

| १८ | १९ | २० |
|---|---|---|
| २ ४ ५ १ ३ | ३ ४ ५ १ २ | ३ ४ ५ २ १ |
| ४ २ ५ १ ३ | ४ ३ ५ १ २ | ४ ३ ५ २ १ |
| २ ५ ४ १ ३ | ३ ५ ४ १ २ | ३ ५ ४ २ १ |
| ५ २ ४ १ ३ | ५ ३ ४ १ २ | ५ ३ ४ २ १ |
| ४ ५ २ १ ३ | ४ ५ ३ १ २ | ४ ५ ३ २ १ |
| ५ ४ २ १ ३ | ५ ४ ३ १ २ | ५ ४ ३ २ १ |

अथ चतुर्थपंक्तौ एककस्य ज्येष्ठा मात्रात्तं मुक्त्वा त्रिकस्याऽधोज्येष्ठः स्थाप्यने परं तथा समयभेदः-स्यात्ततोद्विकं त्यक्त्वा सर्वज्येष्ठ एककः स्थाप्यः, अग्रतउपरितनसदृश २४५ रुपा अंकाः स्थाप्याः शेषश्चात्रत्रिकः सपूर्वं स्थाप्यः जाताश्चतुर्थी पंक्तिः ३१२४५, एवमनया प्रक्रियया तावज्ज्ञेयं यावच्चरमपंक्तौ पंचचतुष्कत्रिकद्विकैकका: ५४३२१ । अथ प्रस्तारकरणांतरं विवक्षुः प्रस्तावनागाथामाह—

एगाईणपयाणं, उड्ढअहो आयया सुपंतीसु । पच्छारकरणमवरं भणामि परिवट्ट अंकेहिं ॥८॥

व्याख्या—इह एकादीनां पदानामुर्ध्वाध आयता पंक्तयः प्रस्तार्यंते, ततस्तासु पंक्तिषु प्रस्तारस्य करणमपरं भणामि परिवर्त्तांकैः इह यस्यां पंक्तौ यावद्भिर्वारैरेकैकं पदं परावर्त्यते तस्यां २ पंक्तौ तदंक संख्यायाः परिवर्त्तांक इति संज्ञा तत्र पूर्वं परिवर्त्तांकानयने करणमाह—

अंतंकेण विभत्तं गणगणियं लद्धु अंकु सेसेहिं। भइयव्वो परिवट्टो, नेया नवमाइ पंतीसु ॥९॥

व्याख्या गणस्य—गच्छस्य प्रस्तारादत्र नवकरूपस्य गणितं विकल्प भंगसंख्या ३६२८८० रूपं, तदंत्यांकेनाऽत्र नवकरूपेण भक्तं लब्धं ४०३२० ततो नवमपंक्तावयं परिवर्त्तांको ज्ञेयाः, कोऽर्थः अस्यां पंक्त वेतावन्त एतावतां वारान्नवमाष्टमसप्तमादीनि पदान्यधोऽधोन्यसनीयानि तथा लब्धोऽङ्कः ४०३२० रूपैरष्टभि र्भज्यते लब्धं ५०४० अयमष्टमपंक्तौ परिवर्त्तोऽस्य च प्रागुवत् शेषैः सप्तभिर्भागे लब्धं ७२० सप्तमपंक्तावयं परिवर्त्तः अस्य च प्राग्वत् शेषैः षड्भि भागे लब्धं १२० षष्ट पंक्तौ परिवर्त्तऽङ्कोयं तस्य च पंचभि र्भक्ते लब्धं २४ पंचमपंक्तौ परिवर्त्तः अस्य चतुर्भि र्भागे लब्धं ६ चतुर्थ पंक्तौ परिवर्त्त अस्य तु त्रिभि र्भागे लब्धं द्वयं २ तृतीयपंक्तौ परिवर्त्तोऽस्य द्वाभ्यां भागे लब्धं १ द्वितीयपंक्तौ परिवर्त्त तस्याप्येकेन भागे लब्धः १ एकः प्रथमपंक्तौ परिवर्त्तोऽथ एतानेव परिवर्त्तान् प्रकारांतरेणानयति—

पुव्वगण भंगसंखा, अहवा उत्तरगणंमि परिवट्टो। निय २ संखा निय २ गणअंतंकेण भत्तव्वा ॥१०॥

व्याख्या—अथवा शब्द प्रकारांतरेण पूर्वगणस्य या भंगसंख्या 'एगस्स एग भंगो' इत्यादिका सैवोत्तरगणे परिवर्त्तस्तु तुल्य इत्यर्थः, तथाहि—एककरूपस्य पूर्वगणस्य या भंगसंख्या एकरूपा, सैवोत्तरगणे द्विकरूपे परिवर्त्तः तथा द्विकगणस्य भंग संख्या

द्विकरुपा, उत्तरगणे त्रिकरुपे परिवर्त्तोऽपि द्वयरुपः तथा त्रिकगणे भंगा षट्,तत श्चतुर्थगणे परिवर्त्तोऽपि षट्‌करुपः,तथा चतुर्थगणे भंगा२४पंचमगणे परिवर्त्तोऽपि २४ रुपः,एनमग्रतोऽपि ज्ञेयं, अथोत्तरार्द्धेन परिवर्त्तानयने तृतीयं प्रकारमाह;'निय'२ इति । अथवा निज २ गणस्य भंगसंख्या निजनिजेन गणस्यांत्यांकेन भक्ता परिवर्त्तः स्यात्, तथाहि–एककगणस्य संख्या भंगसंखकरुपा सांऽत्यांकेनात्रैककरुपेण भक्ता लब्ध एकोऽयमाद्यपंक्तौ तथा द्विकगणे भंगसंख्याद्वयरुपा सा द्विकगणस्यांत्यांकेन द्विकरुपेण भक्ता लब्ध एकोऽत्रापि परिवर्त्तो एक एव तथा त्रिकगणे भंगसंख्या षट् स्वरुपा सा त्रिकगणस्यांकेन त्रिक त्रिकरुपेण भक्ता लब्धौ द्वौ त्रिकगणे परिवर्त्तः । तथा चतुर्थगणे भंगसंख्या २४ रुपा सांत्यांकेन चतुष्करुपेण भक्ता लब्धाः षट् अत्रायं परिवर्त्तः एवमग्रतोऽपि ज्ञेयं । अथैतावनेव परिवर्त्तान् पूर्व्वानुपूर्व्या गाथाबन्धेनाह–

इग १ इग २ दु ३ छ ४ चउवीसं ५ वीसुत्तरसयं च ६ ।
सत्तसयवीसा७ पणसहस्सा, चालीसा८ चत्तसहस्सातिसयवीसा९ ॥११॥

–स्पष्टा इयं परिवर्त्तस्थापना । अथ परिवर्त्तैः ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|
| १ | १ | २ | ६ | २४ | १२० | ७२० | ५०४० | ४०३२० |

प्रस्तुतं प्रस्तारयुक्तिं गाथाद्वयेनाह–

परिवट्टंकपमाणा, अहोर अंतिमाइपंतीसु । अंतिम पमिइ अंका, ठविज्ज वज्जिअ समयभेयं ॥१२॥
जा सयलभंगसंखा, नवरं पंतीसु दोसु पढमासु । कमउक्कमओ कुन्हवि, सेसे अंके ठविज्जासु ॥१३॥

व्याख्या–स्वस्वपरिवर्त्तांकप्रमाणास्तत् संख्यास्तु अलदवारान् पश्चानुपूर्व्याऽंत्यादिषु पंक्तिष्वंत्यप्रभृतीनंकानऽधोऽधः स्थापयेत् समयभेदं वर्ज्जयित्वा सकलभंगसंख्यापूर्त्ति यावत् नवरं प्रथमपंक्तिद्वये प्रथमद्वितीयपंक्त्योरित्यर्थः शेष अंकद्वयं क्रमोत्क्रमाभ्यां स्थाप्यं, पंचपदानाश्रित्य भावना यथा अत्रांत्यापंक्तिः पंचमी तस्यां च चतुर्विंशतिरुपः परिवर्त्तांकः ततश्चतुर्विंशति वारानंत्योऽंक पंचकरुपः स्थाप्यः, ततश्चतुष्कत्रिकद्विकैकका: क्रमेण चतुर्विंशति चतुर्विंशतिवारानऽधोऽधः स्थाप्याः, यावज्जाता सकलभंगसंख्या विंशत्युत्तरशतरुपा संपूर्णा. ततः चतुर्थपंक्तौ षट्‌रुपः परिवर्त्तांक समयभेदकारिणमंत्यमपि पंचकं मुक्त्वा चतुष्कत्रिकद्विकैकका: षट् वारान् स्थाप्याः, ततः षट्वारान् पंचकः स्थाप्यः ततः समयभेदकरं चतुष्कं मुक्त्वा त्रिकद्विकैकका: षट् षट् संख्यान् वारान् स्थाप्याः, ततः समयभेदकरं त्रिकं मुक्त्वा पंचक चतुष्कद्विकैकाः षट् २ संख्याः स्थाप्याः, ततः समयभेदकं द्विकं मुक्त्वा पंचकचतुष्कत्रिकैकका: षट् २ संख्याः स्थाप्याः. ततः समयभेदकरमेककं त्यक्त्वा पंचकचतुष्कत्रिकद्विकाः षट् षट् संख्या स्थाप्याः, जाता चतुर्थपंक्तिः संपूर्णाः. अथ तृतीय पंक्तौ द्विकरुपः परिवर्त्तांकः ततः पंचकं चतुष्कं समयभेदकरं मुक्त्वा त्रिकद्विकैकका द्वि र्द्वे स्थाप्याः, ततः पंचकं त्रिकं च मुक्त्वा चतुष्कद्विकैकका: द्विर्द्विः स्थाप्यः ततश्चतुष्कत्रिकैकका: ततश्चतुष्कत्रिकद्विकाः ततस्त्रिकद्विकैकका: ततः पंचकद्विकैकका: ततः पंचकत्रिकद्विकाः एवमंत्यादयोऽंकाः समयभेदकरानंकान् मुक्त्वा द्विर्द्विः स्थाप्याः तावत् यावत् संपूर्णा तृतीया पंक्तिः स्यात् आदिपंक्तिद्वये च शेषावंकौ पूर्वभंगे क्रमात् द्वितीय भंगे तु क्रमात् स्थाप्यौ यावत् द्वेऽपि पंक्ती संपूर्णे स्याताम्. अथ समयभेदस्वरुपम् माह–

जंमि य निक्खित्ते, खलु सो चेव हविज्ज अंकविन्नासो। सो होइ समयभेओ, वज्जेयव्वो पयत्तेण ॥१४॥ स्पष्टा।

अथ नष्टानयनेकरणमाह—

नठ्ठ को भाइज्जइ, परिवट्टेहिं इहंति माईहिं । लद्धा अंताइगया, तयग्गिमं जाण नट्ठंतु ॥१८॥

इगसे सेसेसंका ठाविज्ज कमेण सुन्न । सेसंमि लद्धं करु, इग हीणं उक्कमओ ठवसु सेसंके ॥१६॥ युग्मम् ।

व्याख्या–नष्टांको नष्टरूपस्य संख्यांकः सोऽन्त्यादिभिः परिवर्त्ताकैः भज्यते यल्लभ्यते तदंकसंख्या अंत्यादयोऽङ्कागता ज्ञेयाः कोऽर्थः नष्टरुपतः पूर्वं तावत् संख्या अंत्यादयोऽङ्कास्तस्यां पंक्तौ परिवर्त्ताङ्क संख्यवारान् स्थित्वा तत उच्छिता इत्यर्थः ततस्तेभ्यः पश्चानुपूर्व्या यदग्रेतनमंकरुपं तन्नष्ट ज्ञेयं. कोऽर्थः तन्नष्टकथने तत्र २ पंक्तौ लेख्यमित्यर्थः एवं क्रियमाणे यद्येकः शेषः स्यात्तदा शेषरुपाणि लिखितरुपादवशिष्टानि क्रमेण स्थाप्यानि प्रथमादिपंक्तिषु लेख्यानीत्यर्थः तथा यदि शून्यं शेषम् स्यात्तदा लब्धांक एकेन हीनः कार्यः ततः एकहीनलब्धांकसंख्या अंत्यादयोऽङ्कास्तस्यां पक्तौ गता ज्ञेयाः पूर्वस्थापिता संप्रति उच्छिता इत्यर्थः तेभ्यः पश्चानुपूर्व्याऽग्रेतनं नष्टं रुपं ज्ञेयं इति प्राग्वत् लिखितनष्टरुपेभ्यः शेषाऽङ्का प्रथमादिपंक्तिषु क्रमेण लेख्याः ।

अत्र पंचपदीमाश्रित्योदाहरणं यथा त्रिंशत्तमं रुपम् नष्टं तत्कीदृशम् ? इति केनापि पृष्टं ततोऽत्र त्रिंशदंत्यपरिवर्त्तेन चतुर्विंशतिरुपेण भज्यते लब्ध एकः शेषाः षट् ततोऽत्र पंचमपक्तौ पंचकरुपमेक रूप गत कोऽर्थः चतुर्विंशतिवारान् स्थित्वा संप्रति पंक्ति उच्छितमित्यर्थः तस्माच्च पश्चानुपूर्व्याऽग्रेतनं चतुष्कं रुपं नष्टं ज्ञेयं संप्रति परिवर्त्तते इत्यर्थः अतश्चतुष्को नष्टस्थाने पंचम-पंक्तौ स्थाप्यः तथा शेषषट्कस्य चतुर्थपंक्तिसत्केन षट्कपरिवर्त्तेन भागे लब्ध एकः शेषस्थाने शून्यं ततो लब्धं एकं हीनं क्रियते जातं लब्धस्थानेऽपि शून्यं ततश्चतुर्थपंक्तावेकमपि रुपं गतं नास्ति ततोऽन्त्यमेवपदं पचकरुपं नष्टं ज्ञेयं शेषाऽङ्का एकद्विकत्रिका-

नुक्रमेण स्थाप्याः यथा ३२१५४ इदं त्रिंशत्तमं रुपं ज्ञेयं ।

अथ द्वितीयमुदाहरणं यथा चतुर्विंशतितमं रुपं नष्टं तत्कीदृशमिति पृष्टे चतुर्विंशतेरंत्य परिवर्त्तेन २४ रुपेण भागे लब्ध एकः शेषं स्थाने शून्यं ततः पूर्वोक्तयुक्त्या शून्यशेषत्वात् लब्धमेकहीनं क्रियते जातं लब्धस्थानेऽपि शून्यं ततः पंचमपंक्तावद्याप्येकमपि रुपं गतं नास्ति ततोऽंत्य एव पंचकरुपोऽंकं स्थाप्यः शेषा अंका एकद्विकत्रिकचतुष्कानुक्रमात् स्थाप्या यथा ४३२१५ इदं चतुर्विंशतितमं रुपं.

तृतीयमुदाहरणं यथा सप्तनवतितमं रुपं नष्टं ततः सप्तनवतेरंत्य परिवर्त्तेन २४ रुपेण भागे लब्धाश्चत्वारः शेष एकोऽतः पंचमपंक्तावंत्यादयश्चत्वारोऽंकागता ज्ञेयाः तेभ्योऽग्रेतन एकको नष्टस्थाने लेख्यः एकशेषत्वात् शेषा अंका क्रमाल्लेख्याः यथा २३४५१ इदं सप्तनवतितमम् ।

अथ चतुर्थमुदाहरणं यथा पंचाशत्तमं रुपं नष्टं ततः पंचाशतोऽंत्यपरिवर्त्तेन २४ रुपेण भागे लब्धौ द्वौ ततोऽंत्यपंक्तावंत्यादारभ्य द्वावंकौ गतौ तदग्रेतनस्त्रिको नष्टः स्थाने लेख्यः तथा शेषस्य द्विकस्य चतुर्थपंक्तिपरिवर्त्तेन षट्करुपेण भागे किमपि न लभ्यते ततोऽत्र चतुर्थपंक्तौ एकमपि रुपं गतं नास्ति अतोऽंत्यपंचक एव नष्टस्थाने लेख्यः ततः तृतीयपंक्तौ शेषस्य द्विकस्य परिवर्त्तेन द्वयरुपेण भागे लब्ध एक शेषं शून्यं ततो लब्धमेकहीनं क्रियते जातं लब्धस्थानेऽपि शून्यं अतस्तृतीयपंक्तावेकमपि रुपं गतं नास्ति ततः पंचकस्य चतुर्थपंक्तौ स्थापितत्वेन पुनः स्थापने समयभेदः स्यादिति तं मुक्त्वाऽंत्योंकश्चतुष्क एव स्थाप्यः शेषौ २१ रुपावुत्क्रमेण स्थाप्यौ यथा २१४५३ इदं पञ्चाशत्तमं रुपं.

पंचमसुदाहरणं यथा पंचषष्टितमं रूपं नष्टं ततः पंचषष्टेरंत्यपरिवर्त्तेन २४-रूपेण भागे लब्धौ द्वौ ततः पंचकचतुष्क-रूपौ द्वौ अंकौ गतौ ताभ्यामग्रेतनस्त्रिको नष्टस्थाने लेख्यः शेषाणां सप्तदशानां चतुर्थपंक्तिपरिवर्त्तेन भागे लब्धौ द्वौ ततः पंचक-चतुष्करूपावंसकौ गतौ तदग्रेतनस्त्रिकाश्च स्थाप्यते तदा समयभेद स्यादिति तं मुक्त्वा द्विक स्थाप्यः शेषाणाम् तृतीयपंक्तिपरि-वर्त्तेन भागे लब्धौ द्वौ शेषः एकोऽत्रापि पंचकचतुष्कौ द्वौ गतौ तदग्रेतनयो स्त्रिकद्विकयोः स्थापने समयभेद इति तौ त्यक्त्वा एककः स्थाप्यः, एकशेषत्वात् शेषौ द्वौ अंकौ क्रमेण स्थाप्यौ यथा ४५१२३ इदं पंचषष्टितमं रूपं.

षष्ठमुदाहरणं यथा सप्तमं रूपं नष्टं तत्र सप्तानामंत्य परिवर्त्तेन चतुर्विंशत्या भागो नाप्यते ततो त्रैकमपिकं गतं नास्ति इति पंचक एव स्थाप्यः. अथ सप्तानां चतुर्थपंक्तिपरिवर्त्तेन षट्करूपेण भागे लब्धः एक शेषश्चैकः ततः एकोऽत्योऽकोऽत्र गतः 'नट्ठदिट्ठविहाणे'त्यादि वक्ष्यमाणगाथया वर्जितत्वात् पंचमपंक्तिस्थितः पंचको गत मध्ये न गण्यते ऽत्यांकोऽत्र चतुष्करूप एव गतः तदग्रेतनस्त्रिकश्च नष्टस्थाने लेख्यः एकशेषत्वात् शेषाः अंकाः क्रमेण लेख्याः यथा १२४३८.

अथ सप्तमसुदाहरणं तत्र एकचत्वारिंशत्तमं रूपं नष्टं एकचत्वारिंश तोऽत्य परिवर्त्तेन भागे लब्ध एकः ततः एकोऽत्योऽकः पंचको गतः तदग्रेतनचतुष्को नष्टस्थाने लेख्यः ततश्चतुर्थपंक्तिपरिवर्त्तेन ६ रूपेण शेषसप्तदशानां भागे लब्धौ द्वौ 'नट्ठ दिट्ठे'-त्यादि गाथया वर्जितत्वात् चतुष्कं टालयित्वा शेषावंत्यादारभ्य द्वावंकौ पंचकत्रिकरूपौ गतौ ततस्तदग्रेतनो द्विकश्चतुर्थपंक्तौ लेख्यः तथा शेषाणां पंचानां तृतीयपंक्तिपरिवर्त्तेन २ रूपेण भागे लब्धौ द्वौ अत्रापि 'नट्ठ दिट्ठे'त्यादि गाथारीत्या टालयित्वा चतुष्कं, शेषौ द्वौ अंकौ पंचकत्रिकौ गतौ तदग्रेतनो द्विको नष्टः स्थाने लेख्यते एवमेवं समयभेदः स्यादिति तं मुक्त्वा तृतीय-

पंक्तौ तदग्रेतन एकको लिख्यते एकशेषत्वात् शेषावंकौ त्रिकपंचकौ क्रमेण लेख्यौ यथा ३५१२४ इदं एकचत्वारिंशत्तमं रूपम् एवं सर्वोदाहरणेषु ज्ञेयं.

अथोद्दिष्ट.नयने करणमाह—

**अंता इग य अंका, नियरपरिवट्ट ताडिया सव्वे। उद्दिट्ठ भंगसंखा, इगेण सहिया मुणेयव्वा ॥१७॥**

व्याख्या—यावंतोऽङ्काः सर्वपंक्तिष्वंत्यादयो गताः स्युः कोऽर्थः, स्वस्वपरिवर्त्ताकसंख्यावारान् वर्तित्वोत्थिताः स्युः तेऽङ्काः स्व २ परिवर्त्तैस्ताडिताः गुणिताः पश्चादेकयुता उद्दिष्ट भंगस्य संख्या स्यात्. उदाहरणं यथा २३४५१, इदं कतिथम् रूपमिति–केनाऽपि पृष्टं; अत्रांत्यपंक्तौ दृष्ट एककः अतोऽंत्यादयः पश्चानुपूर्व्या पंचकचतुष्कत्रिकद्विकरूपाश्चत्वारोऽङ्का गताः, ततश्चत्वारः पंचमपंक्तिपरिवर्त्तेन २४ रूपेण गुणिता जाता षण्णवतिः, तथा चतुर्थपंक्तौ दृष्टः पंचकोऽतोऽत्र गतांकाभावः तृतीयपंक्तौ दृष्टचतुष्कः, अत्र पंचको गतः स्यात् परं 'नट्ठ दिट्ठे'त्यादि गाथया वर्जितत्वात् तद् गतमध्ये न गण्यते, तेनाऽत्राऽपि गतांकाभावः, एवं द्वितीयपंक्तौ पंचकचतुष्कौ प्रथमपंक्तौ च पंचकचतुष्कत्रिकागताः स्युः परं वर्जितत्वेन गतांकेषु न गण्यंते, अतस्तत्रापि गतांकाभावः, ततः षण्णवतिरेकयुता जाता सप्त नवतिः इद सप्तनवतितमं रूपं तथा ३२१५४. इदं कतिथमिति पृष्टे, अत्रांऽत्यपंक्तौ दृष्टश्चतुष्कः ततः एकः पंचकरूपोऽङ्को गतः ततः एकश्चतुर्विंशत्या परिवर्त्तेन गुण्यते जाताः २४, चतुर्थपंक्तौ पंचकस्य दृष्टत्वात् गतोंकः कोऽपि नास्ति तृतीयपंक्तौ दृष्टः एककः 'नट्ठ दिट्ठे'त्यादि गाथोदितत्वात् पंचकचतुष्कौ गतांकमध्ये न गण्येते, ततस्त्रिकद्विकरूपौ द्वावेवगतौ द्वौ च स्वपरिवर्त्तेनद्विकरुपेण गुणिता जाताश्चत्वारः पूर्वं चतुर्विंशतिमध्ये क्षिप्ता जाता २८,

द्वितीयपंक्तौ द्रष्टो द्विकोऽत्राऽपि पंचकचतुष्कयोः प्रागुवत् वर्जितत्वात् एक एव त्रिकरुपोऽङ्को गतः स्वस्वपरिवर्त्तेनैकरुपेण गुणितो जाता एक एव पूर्वाष्टाविंशतिमध्ये क्षिप्तः जाता एकोनत्रिंशत् प्रथमपंक्तौ तु प्रागुवत् पचकचतुष्कयोर्वर्जितत्वेन गतोऽङ्कः कोऽपि नास्ति, सर्वमीलने एकोनत्रिंशदेकेनयुतात्रिंशत् ततः इद त्रिंशत्तम रुपं तथा २३४१५. अयं कतिथोभंग इति–केनापि पृष्टं, अत्रांत्यपंक्तौ पंचकस्य द्रष्टत्वात् न कोऽपि गतोऽङ्कः चतुर्थपंक्तौ प्राक्तनरीत्या पंचकस्य वर्जितत्वाच्चतुष्कत्रिकद्विकरुपास्त्रयोऽङ्कागतास्ततस्त्रयः स्वपरिवर्त्तेन ६ रुपेण गुणिता जाता १८. तृतीयपंक्तौ पंचकस्य वर्जितत्वात् गतोऽङ्को नास्ति एवं द्वितीयप्रथमपंक्त्योरपि ततोऽष्टादश एकयुता जाता १९, अयं एकोनविंशो भंगः तथा २१४५३, अयं कतिथ इति पृष्टे अत्रांत्यपंक्तौत्रिकस्य द्रष्टत्वात् पंचकचतुष्करुपौ द्वौ अंकौ गतौ ततो द्वौ स्वपरिवर्त्तेन २४ रुपेण गुणितौ जाताः ४८.चतुर्थपंक्तौ पंचकस्य द्रष्टत्वेन गतोऽङ्को नास्ति, तृतीयपंक्तावपि पंचकस्य प्रोक्तरीत्या वर्जितत्वान्नकोऽपि गतोऽङ्क द्वितीयपंक्तौ पंचकचतुष्कत्रिकाणामपोदितत्वात् द्विकरुपएक एव गतोंकः स एकेन गुणितो जातः एक एव ४८ मध्य क्षिप्तो जातः एकोनपंचाशकदेकयुता जाता पञ्चाशत् अयं पंचाशत्तमो भंग इति वाच्यं, एवं सर्वत्र ज्ञेयं.

गतांकगणनेऽपवादमाह–

नट्ठुदिट्ठविहाणे, जे अंका अंतमाई पंतीसु । पुव्विं ठविया नहि ते, गयंकगणणे गणिज्जंति ॥१८॥

व्याख्या–नष्टोद्दिष्टविधौ येऽङ्का पश्चानुपूर्व्याऽन्त्यादिषु पंक्तिषु पूर्वं स्थापिता भवंति, ते गतांकसंख्यायां क्रियमाणायां न गण्यंते. अंत्यादारभ्यांकक्रमायाताऽपि टाल्यंते ते हि अंत्यादिपंक्तिषु स्थितत्वेनापरपंक्तिषु अद्यापि नाधिकृता अतस्तान् टाल-

यित्वा गतांकानां संख्याः कार्येत्यर्थः भावना नष्टोद्दिष्टोदाहरणेषु कृता.

अथ कोष्टकप्रकारेण 'नष्टोद्दिष्टे' आनिनीषुः पूर्वं कोष्टकस्थापनामाह—

पढमाए इगुकोठो उड्ढअहो आययासु पंतीसु । एगेगवड्ढमाणा, कोट्ठा सेसासु सव्वासु ॥१९॥

व्याख्या-इहोर्ध्वाध आयताः कोष्टकपंक्तयो रेखाभिः क्रियन्ते तत्र प्रथमपंक्तौ एक एव कोष्टकः शेषपंक्तिषु पूर्वं २ पंक्तित उत्तरोत्तरपंक्तिष्वधस्तात् संख्ययैककवर्द्धमानां कोष्टकाः कार्याः ।

अथ कोष्टकेष्वंकस्थापनामाह–

इगु आइम पंतीए, सुन्ना अन्ना सुआइ कोठेसु । परिवट्टा बीएसु, दुगाइ गुणियाय सेसेसु ॥२०॥

व्याख्या-आदिमपंक्तौ प्रथमकोष्टके एकक एव स्थाप्यः, अन्यासुद्वितीयादिपंक्तिष्वाद्यकोष्टकेषु शून्यान्येव स्थाप्यानि, द्वितीयेषु कोष्टकेषु परिवर्त्तांकाः स्थाप्याः, तथा तृतीयकोष्टकेषु त एव द्विगुणाः चतुर्थे कोष्टकेषु त एव त्रिगुणाः पंचमेषु चतुर्गुणाः षष्ठेषु पंचगुणाः सप्तमेषु षड्गुणाः अष्टमे सप्तगुणाः नवमकोष्टकेऽष्टगुणाः कोष्टकपंक्तिस्थापनायंत्रकं यथा–

अथ नष्टोद्दिष्टविधौ कोष्टकेष्वंकगुणनरीतिमाह–

पुव्वठियं के मुत्तुं, गणियव्वा अंतिमाइपंतिसु । तुट्ठाओ उवरिमाओ, आइं काऊण लहु अंकं ॥२१॥

अहवा जिट्ठं अंकं, आइं काऊण मुत्तु ड्डवियं के । पंतिसु अंतिमाइसु, हिट्ठिमकोट्ठाउ गणियव्वं ॥२२॥

व्याख्या-यथा प्राक् नष्टोद्दिष्टविधौ पश्चानुपूर्व्याऽंत्यादिपंक्तिषु येऽंकाः पूर्वं स्थापिताः स्युस्ते गतांकेषु न गण्यन्ते, तथा-

ऽश्राऽपि तान्मुक्त्वा लघुं लघुमंकमादौ कृत्वोपरितनकोष्टकाद् गणनीयम् पश्चानुपूर्व्यां नवाऽष्टसप्तषट्पंचचतुरादिभिरंकैः कोष्टका अंकनीया इत्यर्थः, अथवा ज्येष्टमंकमादिकृत्वाऽधस्तन कोष्टकाद् गणनीयं पूर्व्यानुपूर्व्या एकद्वित्रिचतुःपंचादिभिरंकैः कोष्टका अंकनीया इत्यर्थः नष्टाद्यानयनेऽयमर्थः स्पष्टो भावी.

अथ नष्टानयनमाह–

पइपंती एग कोठय, अंकगाहणेण जेहिं जेहिं सिया । मूलइगंकज्जुएहिं, नट्ठं को ते सुखविअक्खे ॥२३॥
अक्ख ठाणसमाइं, पंतीसु जु तासु नट्ठरुवाइं । नेआइं सुन्न कोठय, संखा सरिसाइं सेसासु ॥२४॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० | ० | ० |
| | १ | २ | ६ | २४ | १२० | ७२० | ५०४० | ४०३२० |
| | | ४ | १२ | ४८ | २४० | १४४० | १००८० | ८०६४० |
| | | | १८ | ७२ | ३६० | २१६० | १५१२० | १२०९६० |
| | | | | ९६ | ४८० | २८८० | २०१६० | १६१२८० |
| | | | | | ६०० | ३६०० | २५२०० | २०१६०० |
| | | | | | | ४३२० | ३०२४० | २४१९२० |
| | | | | | | | ३५२८० | २८२२४० |
| | | | | | | | | ३२२५६० |

युग्मव्याख्या–इह प्रतिपंक्ति सत्कैकक एव कोष्टकांको ग्राह्यः ततो यै यैः कोष्टकांकैः परिवर्त्तसत्कैर्मूलपंक्तिसत्कैकयुतै र्नष्टांको नष्टभंगस्य संख्या स्यात् तेषु तेषु कोष्टकेष्वभिज्ञानार्थं हे शिष्य त्वं अक्षान् क्षिप स्थापय ॥२३॥ अथ द्वितीयगाथार्थः कथ्यते अक्षस्थानानि अक्षक्रान्ताः कोष्टकाः तैः समानिसंख्यया तुल्यानि कोऽर्थः अक्षा-

क्रान्त कोष्टकानां प्रथमो द्वितीयतृतीयश्चतुर्थःपंचम इत्यादि रुपाया संख्या तासु पंक्तिषु नष्टरुपाणामपि सैव संख्या ज्ञेया. यावंतिथोऽक्षाक्रांतः कोष्टकस्तावंतिथं नष्ट रुपमित्यर्थः शेषाः स्व अक्षानाक्रांतपंक्तिषु शून्यकोष्टक संख्या तुल्यानि नष्टरूपाणि लेख्यानि, उदाहरणं यथा त्रिंशत्तमो भंगो नष्टः सः कीदृश इति केनाऽपि पृष्टं ततः पंचपदकोष्टकयंत्रके पचमपंक्तिस्थ २४ तृतीयपंक्तिस्थः ४ द्वितीयपंक्तिस्थः१ अंकै र्जाता २९ मूलपंक्तिस्थ १ युतत्वेन ३० नष्टभंगस्य संख्या ततोऽभिज्ञानार्थमेतेषु कोष्टके श्चऽक्षाः क्षिप्ताः ततः पचमपंक्तौ सर्वलघुं पंचमादिकृत्वा पश्चानुपूर्व्या पंचम चतुर्थ इत्यादिगुणनेऽक्षाक्रांतकोष्टके स्थितश्चतुष्कः, ततः पंचमपंक्तौ नष्टस्थाने चतुष्को लेख्यः चतुर्थपंक्तिरक्षैर्नाक्रांताऽतः सर्वलघुपंचकमादिं कृत्वा गुणने शून्यकोष्टके स्थितः पंचक एव चतुर्थपंक्तौ नष्टस्थाने लेख्यः तथा तृतीयपंक्तौ पचक चतुष्कौ लघू अपि पूर्वं स्थापितत्वेन मुक्त्वा शेषं त्रिकमेवलघुमादिं कृत्वा गणनेऽक्षाक्रान्त कोष्टके स्थित एककोऽतः स एव तृतीयपंक्तौ नष्टस्थाने स्थाप्यः तथा द्वितीयपंक्तौ प्राग्वत पंचकचतुष्कौ पूर्वं स्थितौ विमुच्य लघुं त्रिकमादिं कृत्वा गुणनेऽक्षाक्रान्त कोष्टके स्थितस्त्रिकः स एवाद्यपंक्तौ नष्टो ज्ञेयः इति जातो त्रिंशत्तमो भगः ३२१५४ एवं ज्येष्टज्येष्टमंकमादिं कृत्वाऽधस्तनकोष्टकाद् गणनेऽपीदृशमेवेदं नष्टरुपमायाति यथांत्यपंक्तौ सर्वज्येष्टमेककमादौ कृत्वाऽधस्तन कोष्टकाद् गणनेऽक्षाक्रान्तस्थाने स्थितश्चतुष्कः ततः स एव तत्र नष्टो लेख्यः चतुर्थपंक्तौ पूर्वं पंचमपंक्तिस्थापितं चतुष्कं टालयित्वाऽधस्तन कोष्टकाद् सर्वज्येष्टमेकमादिं कृत्वा गुणनेऽक्षाक्रान्तत्वाभावात् शून्यके स्थितः पंचक एव नष्टस्थाने लेख्यः तृतीयपंक्तौ प्राग्वत् ज्येष्टमप्येककं पूर्वं स्थापितत्वात् टालयित्वा शेषं ज्येष्टं द्विकं आदिं कृत्वा गणनेऽक्षाक्रांतस्थाने स्थितो द्विकः स एव तत्र लेख्यः आद्यपंक्तौ सर्वज्येष्टौ एककद्विकौ पूर्वं स्थापितत्वेन त्यक्त्वा ज्येष्टं

द्वितीयपंक्तौ द्रष्टो द्विकोऽत्राऽपि पंचकचतुष्कयोः प्राग्वत् वर्जितत्वात् एक एव त्रिकरूपोऽङ्को गतः स्वस्वपरिवर्त्तनैकरूपेण गुणितो जाता एक एव पूर्वाष्टाविंशतिमध्ये क्षिप्तः जाता एकोनत्रिंशत् प्रथमपंक्तौ तु प्राग्वत् पंचकचतुष्कयोर्वर्ज्जितत्वेन गतोऽङ्कः।

अथोद्दिष्टकरणमाह—

उद्दिठभंग अंकप्पमाणकोठेसु संति जे अंका। उद्दिठभंगसंखा, मिलिएहिं तेहिं कायव्वा ॥२५॥

व्याख्या—उद्दिष्टो यो भंगस्तस्य येऽङ्का नमस्कार पदाभिज्ञानरूपा एकं द्वित्रिचतुरादिकास्तत्प्रमाणास्तत्संख्यास्तावतिथा इत्यर्थः। ये कोष्टास्तेषु ये ऽङ्काः—परिवर्त्तांकास्संति, तैस्सर्वैरेकत्रमीलितैरुद्दिष्ट भंगस्य संख्या स्यात्, उदाहरण यथा ३२४१५ अयं कतिथो भंग इति पृष्टं केनचित् अत्र पंचमपंक्तौ द्रष्टः पंचकः सर्वलघुं पंचकमादौ दत्वोपरितनकोष्टकाद् गणने शून्यकोष्टे स्थितः पंचकस्ततोऽत्र न किंचिल्लभ्यते चतुर्थपंक्तौ द्रष्ट एककः पूर्वं पंचमपंचकं लघुक्रमागतमपि त्यक्त्वा चतुष्कं लघुमादौ दत्वा गणने एकाक्रान्तकोष्टकसत्का लब्धाः १८ तृतीयपंक्तौ द्रष्टचतुष्कः प्राग्वत् पंचकं त्यक्त्वा लघु चतुष्कमादौ दत्वा गणने चतुष्काक्रान्तकोष्टकसत्कं लब्धं शून्यं द्वितीयपंक्तौ द्रष्टो द्विकः ततः प्रोक्तरीत्या पंचकचतुष्कौ लघू अपि त्यक्त्वा लघु त्रिकमादौ दत्त्वा गणने द्विकाक्रान्तकोष्टे लब्ध एककः आद्यपंक्तौ द्रष्ट त्रिकः ततः प्राग्वत् पंचकचतुष्कौ मुक्त्वा त्रिकमादौ दत्वा गणने त्रिकाक्रान्ते कोष्टे लब्ध एककः सर्वलब्धांकमीलने जाता २० ततोऽयं विंशतितमो भंगः ज्येष्टं ज्येष्टमंकमादौ कृत्वाऽधस्तनकोष्टकाद् गणनेऽप्यायमेव संख्या यथा पंचमपंक्तौ द्रष्टः पंचकः ततः सर्वज्येष्टमेककमादौ कृत्वाऽधस्तनकोष्टकाद् गणने पंचकाक्रान्तकोष्टके लब्ध शून्यं चतुर्थपंक्तौ द्रष्टः एककः तं ज्येष्टत्वादादौ त्यक्त्वाऽधस्तनकोष्टकाद् गणने लब्धा एककाक्रांतकोष्टकेऽष्टादशः तृतीयपंक्तौ द्रष्टश्चतुष्कः सर्वज्येष्टमप्येककं पूर्वस्थितत्वेन मुक्त्वा ज्येष्टं द्विकमादौ दत्वाऽधस्तनकोष्टकाद् गणने चतुष्काक्रांतकोष्टके

लब्धं शून्यं द्वितीयपक्तौ द्रष्टो द्विकोऽत्रापि प्रोक्तरीत्या ज्येष्टमेककं मुक्त्वा द्विकं ज्येष्टमादौ दत्वा गणने द्विकाक्रान्तकोष्टे लब्धः एकः आद्यपंक्तौ ज्येष्टौ एककद्विकौ मुक्त्वा त्रिकज्येष्टमादौ दत्वा गणने त्रिकाक्रांतकोष्टे लब्ध एकः लब्धांकमीलने जाता विंशतिः द्वितीयमुदाहरणं यथा ५४३२१, अयं कतिथ इति पृष्टे अंत्यपंक्तौ द्रष्ट एकः सर्वलघु पंचकमादौ दत्वोपरितनकोष्टकाद् गणने एकाक्रान्तकोष्टे लब्धाः षण्णवतिः चतुर्थपंक्तौ दृष्टो द्विकः प्राग्वद् गणने द्विकाक्रांतकोष्टे लब्धा अष्टादश तृतीयपंक्तौ दृष्टस्त्रिक प्राग्वद्गणने द्विकाक्रांतकोष्टे लब्धाश्चत्वारः द्वितीयपंक्तौ द्रष्टश्चतुष्कः प्राग्वत् गणने चतुष्काक्रान्तस्थाने लब्ध एकः आद्यपंक्तौ द्रष्टपंचकः प्राग्वत् गणने पंचकाक्रांतकोष्टे लब्ध एकः सर्वलब्धमीलने जातं विंशत्युत्तरशतं ततो विंशत्युत्तरशतसंख्योऽयं भंग इतिवाच्यं एवं ज्येष्टमंकमादौ दत्वाऽधस्तनकोष्टेभ्यो गणनेऽप्ययमेव संख्या यथाऽत्यपंक्तौ द्रष्ट एक सर्वज्येष्टं तं आदौ दत्वा गणने एकाक्रान्तो कोष्टे लब्धाः १६ चतुर्थपंक्तौ पूर्वं स्थिततत्वेन ज्येष्टमेककं मुक्त्वा द्विकं ज्येष्टं आदौ दत्वा प्राग्वत् गणने द्विकाक्रांतकोष्टे लब्धाः १८ एवं तृतीयपंक्तौ पूर्वस्थितावेकद्विकौ मुक्त्वा त्रिकमादौ दत्वा गणने तदाक्रान्तकोष्टे लब्धाः ४ द्वितीयपंक्तावेकद्विकत्रिकान् ज्येष्टानपि पूर्वं स्थिततत्वेन मुक्त्वा शेषं ज्येष्टं चतुष्कमादौ दत्वा गणने लब्धः एकः एवमाद्यपंक्तौ पंचकाक्रांतस्थाने लब्ध एकः सर्वमीलने जातं १२० अथ तृतीयमुदाहरणं १२३४५ अयं कतिथ इति पृष्टे सर्वलब्धं पंचकमादौ दत्वोपरितनकोष्टकाद् गणने पंचकाक्रांतस्थाने लब्धं शून्यं एवं चतुर्थपंक्तौ पंचकम् पूर्वस्थितं मुक्त्वा चतुष्कमादौ दत्वा गणने चतुष्काक्रान्तस्थाने लब्धं शून्यं तृतीयायां प्रोक्तरीत्या त्रिकमादौ दत्वा गणने लब्धं शून्यं एवं द्वितीयामपि आद्यपंक्तौ शेषमेककमादौ दत्वा गणने एकाक्रान्तकोष्टे लब्ध एकः ततः प्रथमोऽयं भंगः एवमधस्तनकोष्टकाद् गणने यथा ज्येष्टमेकक-

मादौ दत्वाऽधस्तनकोष्टकाद् गणनेऽन्त्यपंक्तौ पंचकाक्रांतकोष्टे चतुर्थपंक्तौ चतुष्काकान्तकोष्टे तृतीयपंक्तौ त्रिकाक्रान्तकोष्टे द्वितीय-पंक्तौ द्विकाक्रान्ते च कोष्ट लब्धानि शून्यानि आद्यपंक्तौ लब्ध एकः ततः प्रथमोऽयं भंगः एवं सर्वत्रज्ञेयं.

अत्रानुपूर्वीभंगगुणनमाहात्म्यमाह—

इअ अणुपुव्विप्पमुहे भंगे सम्मं विआणिउं जोउ। भावेण गुणइनिचं सो सिद्धिसुहाइं पावेइं ॥२६॥
जं छम्मासिय वरसिय, तवेण तिव्वेण झिइ(ज्झ)ए पावं। नमुक्कार अणणुपुव्वी, गुणणे तयंखणद्धेण ॥२७॥
जो गुणइ अणणुपुव्वि, भंगे सयले विसावहाणमणो। दृढरोसवेरिएहिं वद्धो वि समुचए सिग्घं ॥२८॥
एएहिं अभिमंतियवासेणं, सिरसि खित्तमित्तेण। साइणिभुअप्पमुहा, नासंति खणेण सव्वगहा ॥२९॥
अलेविअ उवसग्गा, रायाइ भयाइं कुट्ठरोगाय। नवपय अणाणुपुव्वी, गुणने जंति उवसामं ॥३०॥
तवगच्छमंडणाणं सीसो, सिरिसोमसुंदरगुरुणं। परमपयसंपयत्थी जंपइनवपयथयं एयं ॥३१॥
पंचनमुक्कारथयं एयं सेयं करंति संजमवि। जो जाएइ लहइ सो जिणकित्तियमहिमसिद्धि सुहं ॥३२॥

एषा सप्ताऽपि स्पष्टार्थाः एष श्रीपंचपरमेष्ठिनमस्कारमहामंत्रः सकलसमीहितार्थ—प्रापणकल्पद्रुमाभ्यधिकमहिमा शान्तिकपौष्टि-काद्यष्टकर्मकृत् ऐहिकपारलौकिकस्वाभिमतार्थ सिद्धये यथा श्रीगुर्वाम्नायां ध्यातव्यः। श्रीमत्तपागणनभस्तरणेर्विनेयः श्रीसोमसुन्दरगु-रोर्जिनकीर्तिसूरिः स्वोपज्ञपंचपरमेष्ठिमहास्तवस्य वृत्तिं व्यधाज्जलधि नंदमनुप्रयेब्दे ॥१॥

इति श्रीजिनकीर्तिसूरिविरचितनमस्कारस्तववृत्तिः समाप्ता ॥